# प्रार्थना

कूजन्तं राम रामेति मधुरं मधुराक्षरम्
आरुह्य कविता शाखां वन्दे वाल्मीकि कोकिलम् ॥

वाल्मिकेर्मुनिसिंहस्य कवितावनचारिणः
शृण्वन् रामकथानादं को न याति परां गतिम् ॥

रामाय रामभद्राय रामचन्द्राय वेधसे
रघुनाथाय नाथाय सीतायाः पतये नमः ॥

आपदामपहर्तारं दातारं सर्वसम्पदाम्
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्हयम् ॥

अञ्जनानन्दनं विरं जानकीशोकनाशनम्
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥

आञ्जनेयमतिपाटलाननं काञ्जनाद्रिकमनीयविग्रहम्
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥

ॐ सहनाववतु सहनौ भुनक्तु सहवीर्यं करवावहै
तेजस्विनावधीतमस्तु मा विद्विषावहै ।
ॐ शान्तिः शान्तिः शान्तिः ॥